❋ श्रीसर्वेश्वरो जयति ❋

॥ श्रीभगवन्निम्बार्काचार्याय नमः ॥

श्रीसुदर्शनचक्रावतार-श्रीभगवन्निम्बार्काचार्य-प्रणीत-

# वेदान्तकामधेनु-दशश्लोकी

व्याख्या-

# "नवनीतसुधा"

व्याख्याकारः—

अनन्तश्रीविभूषितजगद्गुरु-श्रीनिम्बार्काचार्यपीठाधीश्वर-

श्री "श्रीजी" महाराज-

श्रीराधासर्वेश्वरशरणदेवाचार्यः

श्रीसुदर्शनचक्रावतार आद्याचार्य जगद्गुरु श्रीभगवन्निम्बार्काचार्यप्रणीत-

# ।। वेदान्तदशश्लोकी ।।

ज्ञानस्वरूपञ्च हरेरधीनं शरीरसंयोगवियोगयोग्यम् ।
अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्त यदनन्तमाहुः ।।
अनादिमायापरियुक्तरूपं त्वेनं विदुर्वै भगवत्प्रसादात् ।
मुक्तञ्च बद्धं किल बद्धमुक्तं प्रभेदबाहुल्यमथापि बोध्यम् ।।
अप्राकृतं प्राकृतरूपकञ्च कालस्वरूपं तदचेतनं मतम् ।
मायाप्रधानादिपदप्रवाच्यं शुक्लादिभेदाश्च समेऽपि तत्र ।।
स्वभावतोऽपास्तसमस्तदोष--मशेषकल्याणगुणैकराशिम् ।
व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम् ।।
अंगे तु वामे वृषभानुजां मुदा विराजमानामनुरूपसौभगाम् ।
सखीसहस्रैः परिसेवितां सदा स्मरेम देवीं सकलेष्टकामदाम् ।।
उपासनीयं नितरां जनैः सदा प्रहाणयेऽज्ञानतमोऽनुवृत्तेः ।
सनन्दनाद्यैर्मुनिभिस्तथोक्तं श्रीनारदायाखिलतत्त्वसाक्षिणे ।।
सर्वं हि विज्ञानमतो यथार्थकं श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः
ब्रह्मात्मकत्वादिति वेदविन्मतं त्रिरूपताऽपि श्रुतिसूत्रसाधिता ।
नान्या गतिः कृष्णपदारविन्दात् संदृश्यते ब्रह्मशिवादिवन्दितात्
भक्तेच्छयोपात्तसुचिन्त्यविग्रहा-दचिन्त्यशक्तेरविचिन्त्यसाशयात्
कृपास्य दैन्यादियुजि प्रजायते यया भवेत्प्रेमविशेषलक्षणा ।
भक्तिर्ह्यनन्याधिपतेर्महात्मनः सा चोत्तमा साधनरूपिकाऽपरा
उपास्य रूपं तदुपासकस्य च कृपाफलं भक्तिरसस्ततः परम् ।
विरोधिनो रूपमथैतदाप्ते ज्ञेया इमेऽर्था अपि पञ्च साधुभिः ।।

* श्रीसर्वेश्वरो जयति *

।। श्रीभगवन्निम्बार्काचार्याय नमः ।।

श्रीसुदर्शनचक्रावतार–श्रीभगवन्निम्बार्काचार्य–प्रणीत

# वेदान्तकामधेनु–दशश्लोकी

व्याख्या–

# "नवनीतसुधा"


व्याख्याकारः—

अनन्त श्रीविभूषित जगद्गुरु श्रीनिम्बार्काचार्यपीठा-

धीश्वर श्री "श्रीजी" महाराज–

**श्रीराधासर्वेश्वरशरणदेवाचार्यः**

अ० भा० श्रीनिम्बार्काचार्यपीठ, निम्बार्कतीर्थ

( सलेमाबाद ) किशनगढ़, अजमेर

[ राजस्थान ]

प्रकाशक—

**श्रीनिम्बार्काचार्यपीठ शिक्षा समिति**

अ० भा० श्रीनिम्बार्काचार्यपीठ, निम्बार्कतीर्थ

( सलेमाबाद ) किशनगढ़, अजमेर

[ राजस्थान ]

| प्रथमावृत्ति | श्रीकृष्ण जन्माष्टमी महोत्सव | न्यौछावर |
|---|---|---|
| १००० | वि० सं० २०५२ | ५ ) रु० |

मुद्रक—

**श्रीनिम्बार्क मुद्रणालय**

निम्बार्कतीर्थ ( सलेमाबाद )

※ श्रीसर्वेश्वरो जयति ※

॥ श्रीभगवन्निम्बार्काचार्याय नमः ॥

# स्वकीयोद्गारः

हंहो ! निःशेषनैम्बार्कजगतेऽतुलानन्दप्रदोऽयमुदन्तः यतोऽस्मदाद्याचार्यश्रीसुदर्शनचक्रावतार—जगद्गुरुश्रीभगवन्निम्बार्का—चार्यविरचित 'श्रीवेदान्तकामधेनु–दशश्लोक्या' 'नवनीतसुधाभिधा' सुमुग्धा राधेवाऽऽह्लादमयी रसदिग्धाविमुग्धविदग्धराधामाधव-हृदयहारिणी नितान्तसन्ततकान्तकान्तेवाऽजस्रमनिर्वाच्यवाङ्—मनसागोचरीभूता निःशेषसंसृतिसौम्यसौख्यरसानुभूतिमवधीरयन्ती, किमप्यरसनाक्षिगोचरीभूतपरमाह्लादभरभरमन्तराविर्भावयन्ती वितुलाभिख्या व्याख्या प्रतिवादिमदोत्कटकटिकटविपाटनोत्कृष्टपटिष्ठैर्भक्तिजनहृदयनेदिष्ठैः सार्वजनीनात्ममार्दव—माधुर्यार्जवादिसद्गुणगणगलमणिमालैर्भक्तितपस्तेजः प्रभृत्युदग्रप्रचण्डमार्तण्डप्रसृमररोचीरश्मिजालालंकृतभालैरसंख्य—यतिपति—देशिकनिर्द्वेषसमादृतसच्छास्त्रसुप्रमाणवचनैरनेकस्वधार्मिकसद्ग्रन्थ-रचनैर्नैम्बार्कनिगमागमागाधाविक्षुब्धबोधसिन्धुसन्निकाशैरस्मदा—चार्यपादैः श्रीनिम्बार्काचार्यपीठाधिष्ठितवर्तमान जगद्गुरु 'श्रीश्रीजी' त्युपाह्व "श्रीराधासर्वेश्वरशरणदेवाचार्यपादै" रात्माविशयं शय-

कुशेशयैर्निसर्गरम्याऽतिभव्या भावुकसुभविकवितत सन्ततिमातन्वती सुतनु तनुरसनिर्झरीव निरमायि ।

अस्या भुक्तिमुक्तिज्ञानवैराग्यानिर्वाच्यरसानन्ददायिन्या विजिष्णुश्लोकाया दशश्लोक्या उपरि प्राक्तनास्मत्सम्प्रदायानुयायिकतिपयविपश्चित्तल्लजैः प्राक्तनश्रीनिम्बार्काचार्यपीठाधीश्वरश्रीपुरुषोत्तमाचार्यैश्चश्रीगिरिधरप्रपन्नश्रीमदमोलकरामशास्त्रिवर्य--नामधेयैसुधीभिरपि वेदान्तरत्नमञ्जूषा–लघुमञ्जूषा--कुञ्चिकाख्यं व्याख्यात्रयं प्राणायि । यत्राऽनेकगूढरहस्यानि व्याक्रियन्त, तट्टीकायुगलमतिगभीरगीर्वाणगवीनिबद्धत्वादतिगहनं सर्वसाधारणजनाबोध्यमिति विमृश्य हृद्दयोदयमहोदयैः प्रातःस्मरणीयास्मदीयैरनन्तश्रीविभूषितैराचार्यपादैः सारल्यमयीं नैर्जरसीं गिरमाश्रित्यैषाऽशेषजनावगम्या नवभव्यभावसारसंवलिता व्याख्या विनिर्मिता । मन्येऽहमनया निम्बार्कभावुकभक्तजनानामशेषविदुषाञ्चापि महाँल्लाभःसंपत्स्यत इति ।

श्रीगुरुवर्यचरणाब्जचंचरीकः—

**सत्यनारायणःशास्त्री**

अजयमेरुः

॥ श्रीभगवन्निम्बार्काचार्याय नमः ॥

# नवनीतसुधां प्रति

आद्य श्रीनिम्बार्काचार्यचरणैर्घटे सागरमिवदशश्लोक्यां सर्व-वेदान्तसारं पूरयित्वाऽतिगम्भीरवेदान्तसारसर्वस्वरूपाऽतिसंक्षिप्तापि सर्वाङ्गपूर्ण वेदान्तदशश्लोकी नाम निरमायि। श्रीपुरुषोत्तमाचार्यचरणैश्च तामतिसंक्षिप्तामपि सागरोपमां वेदान्तदशश्लोकीमवगाह्य तदन्तर्गतानि महत्वपूर्णरत्नानि समुद्धृत्य वृहन्मञ्जूषायां सुरक्षितानि, तानि वृहन्मञ्जूषान्तर्गतानि रत्नानि श्रीहरिव्यासदेवाचार्यचरणै र्मञ्जूषामुद्घाट्य स्वाञ्जलौ कृतानि। सम्प्रति अ० भा० श्रीनिम्बार्काचार्यपीठाधीश्वरै र्जगद्गुरुभिः श्रीश्रीराधासर्वेश्वरशरणदेवाचार्यचरणैस्तु तैरञ्जलिगतैः सिद्धान्तरत्नैरमूल्याऽलभ्यापि वेदान्तकामधेनुरञ्जसाऽऽसादिता, तत्पयः परिणामसिद्धान्तदधिमन्थनं कृत्वा नवीनं नवनीतमानीतम्। न केवलं नवनीतमेवाऽपितु "असुधापि सुधा प्रकटीकृता" निष्कर्षोऽयमस्ति यत्-वेदान्तरत्नमञ्जूषा-सिद्धान्तरत्नाञ्जल्योः सारसर्वस्वभूतामिमां नवनीतसुधामास्वाद्य वेदान्ततत्त्वजिज्ञासवो विद्वांसोऽञ्जसा कृतकृत्या भविष्यन्तीति द्रढीयान् मे विश्वासः।

हरिशरण उपाध्यायः
व्याकरण वेदान्ताचार्यः, निम्बार्कभूषणपदवीकः
पूर्व आचार्यः
श्रीनिम्बार्कसंस्कृतमहाविद्यालयस्य, वृन्दाबनस्य

※ श्रीसर्वेश्वरो जयति ※

# आस्वादनीया नवनीतसुधा

सुदर्शनचक्रावतारैराद्यनिम्बार्काचार्यचरणैरुपास्योपासक— –कृपाफल–भक्तिरस–विरोधितत्त्वानां सर्वजनज्ञातव्यतया स्वसिद्धान्तसारभूतायां वेदान्तकामधेनुदशश्लोक्यां समुपदेशो विहितः। यत्र खलु, उपासना–परम्परा–वाक्यार्थ—साधनादीनि तत्त्वानि च संगृहीतानि । श्रीपुरुषोत्तमाचार्यपादैश्च सर्वविधविमतनिरसनपूर्वकं श्रुति-स्मृति-सूत्रप्रमाणैस्तस्या 'वेदान्तरत्नमञ्जूषा'ऽभिधा महती व्याख्या विहिता । तामेवानुसृत्य परम्पराचार्यैस्तदनुयायिभिः सुधीजनैश्च विविधाष्टीकाग्रन्था निर्मिताः । तेषां वैपुल्यात् सर्वसाधारणवेद्यत्वाभावात् परमकारुणिकैः सङ्कल्पसिद्धैर्विविधनूतनसाहित्यसर्जननिरतैः प्रातःस्मरणीयैर्वर्तमान श्रीनिम्बार्काचार्यपीठाधीश्वरैः "श्रीश्रीजीमहाराजैः" श्रीराधासर्वेश्वरशरणदेवाचार्यैः पूर्वाचार्यसरणिमनुसरद्भिः सुरभारत्यां परमसरला, सरसा, सकलजनहृद्याऽनवद्या वेदान्तकामधेनोः साररूपा "नवनीतसुधा"—ख्या व्याख्या व्यधायि । एतया समेषां महानुपकारो भविष्यतीति मे प्रत्ययः । यतो हि—

श्रीराधाकृष्णपादाब्जेऽनुरागः परमोऽनशम् ।
यामास्वाद्य भवेन्मोक्षो भगवद्भाव आत्मनः ।। इति

आचार्यश्रीचरणरजोरेणुः—

**वासुदेवशरणउपाध्यायः**

व्या० सा० वेदान्ताचार्यः, निम्बार्कभूषणश्च

**प्राचार्यः**—श्रीसर्वेश्वरसंस्कृतमहाविद्यालयस्य

निम्बार्कतीर्थ—सलेमाबाद (राज०)

॥ श्रीसर्वेश्वरो जयति ॥

।। श्रीभगवन्निम्बार्काचार्याय नमः ।।

# ॥ आत्मभावाभिव्यक्तिः ॥

निखिलजगदभिन्ननिमित्तोपादानकारणस्य निरतिशयाऽनन्ता-ऽचिन्त्यस्वाभाविकसौशील्य--सौकुमार्य–सौन्दर्य --माधुर्य-कारुण्य-लावण्य-कृपा-दयाऽर्जव-सर्वशरण्यत्व-मार्दवाद्यखिल--दिव्यकल्याण-गुणगणाऽर्णवस्य विचित्रात्मकभवमहीरुहमूलवीजस्य परात्परपर-ब्रह्मणः सर्वनियन्तुः सर्वेश्वरस्य श्रीकृष्णस्य कलितकरकञ्जा-ङ्गुलिनित्यसुशोभितपरमायुधसुदर्शनावतारेण स्वाभाविकद्वैता-द्वैतराद्धान्तप्रवर्तकेन, श्रीराधाकृष्णनित्यनवनिकुञ्जरसोपासना-प्रदायकेन व्रज-वृन्दावन-गोवर्धन-निम्बग्राम--नित्यनिवासपरायणेन महर्षिवर्यसनकादिदेवर्षिवर्यनारदपरम्परातः सम्प्राप्तसर्वेश्वरेण परमकरुणाऽर्णवेनाऽऽद्याचार्यवर्येण भगवता श्रीनिम्बार्काचार्येण भारतभूतले मनुजरूपेण समवतीर्य सम्प्रदायसिद्धान्तसंस्थापनार्थं निखिललोककल्याणार्थञ्च **"वेदान्त कामधेनुदशश्लोकी"** काम-धेनुवत् व्यरचि।

अथ च सम्प्रदायाचार्यपरम्पराधिष्ठितेन श्रीपुरुषोत्तमाचार्य-वर्येण **'वेदान्तकामधेनुदशश्लोकी'**-व्याख्या **'वेदान्तरत्नमञ्जूषा'**-ऽऽख्या सम्यग्विरचय्य सकलोपकारार्थं या महीयसी कृपाऽकारि तद्वर्णने सर्वथैवाऽसमर्था वयम्। एवं हि श्रीमहावाणीरसग्रन्थप्रणे-तृणा रसिकराजराजेश्वरश्रीहरिव्यासदेवाचार्यचरणेनाऽपि

**'सिद्धान्तरत्नाञ्जलि'**रित्युदाहृता व्याख्या विरचिता तथैव च श्री-गिरिधरप्रपन्नेनाऽपि परमविपश्चिता **'लघुमञ्जूषा'**-ख्या व्याख्या प्रणीता । अनन्तरञ्च श्रीमदमोलकरामशास्त्रिणा महाविदुषा **वेदान्तरत्नमञ्जूषायाः' कुञ्चिका'ख्या** टीका सम्पादिताऽस्ति । अतः परं नाऽन्यद्व्याख्याया अपेक्षाऽस्ति तथापि स्वकीयबोधार्थं निम्बार्कवेदान्तजिज्ञासूनां हितार्थञ्च पूर्वाचार्यसरणिमनुसृत्य परमसंक्षिप्ततमा परमसरलतमा **"नवनीतसुधा"**-भिधा व्याख्या विरचिताऽस्माभिः ।

श्रीनिम्बार्कवेदान्तस्य परमं वैशिष्ट्यं वरीवर्ति यत्स्वाध्यायेन साकल्येन दर्शनशास्त्रस्य परिज्ञानं साधुतया सञ्जायते । श्रुति-शास्त्रे सन्ति द्विविधानि वचनानि द्वैतपरकाणिचाऽद्वैतपरकाण्यपि श्रीनिम्बार्कभगवताऽत्र समानरूपेण द्विविधवचनान्येव स्वीकृतानि तथापि भेदसहिष्णुरभेद एव प्रतिपाद्यते । इतिकृत्वैव स्वाभाविक-भेदाभेदसिद्धान्तः प्रतिपादितो भगवता श्रीनिम्बार्काचार्यचरणेन । श्रुतिसम्मतोऽयंसिद्धान्तः । श्रीनिम्बार्कसम्प्रदायोऽनादिवैदिकसत्स-म्प्रदायोऽस्ति । अयञ्च परमपुरातनतमः । श्रीमदाद्यशंकराचार्या-दप्यत्यन्तप्राचीनतमः श्रीमन्निम्बार्काचार्यपादः । प्रस्थानत्रयीम-वलम्ब्यैव 'वेदान्तपारिजातसौरभा'ख्यं भाष्यं चकार श्रीनिम्बार्क-भगवान् । नाऽत्र काऽपि विप्रत्तिपत्तिः । निम्बार्कदर्शनजिज्ञासुभिः प्रेक्षावद्भिर्महानुभावैर्भगवद्भक्तैश्चाऽपि श्रीनिम्बार्कदर्शनस्य स्वा-ध्यायो नितान्ततयाऽवधारणीयः स्वकीयमानसे येन निश्चप्रचतया निम्बार्कदर्शनशास्त्रस्य परिज्ञानमनेन लघुग्रन्थेनाऽपि प्रभवेदितिवयं आशास्महे ।

प्रस्तुतव्याख्यायाञ्च 'गच्छतां स्खलनं क्वाऽपि भवत्येव प्रमादतः' इत्युक्त्या संस्खलनं तु स्वाभाविकमेव तथापि तत्त्वज्ञै-

र्धीरैस्तु प्रस्खलनमपि साधुतया समुचितं सुव्यवस्थितं संविधाय स्वीयस्वान्तेऽवधारयन्ति, सुतराञ्चैव नाऽस्माकं चेतसि कोऽपि विचिकित्सावकाशः।

यद्यपि सम्प्रत्यास्माकीनं स्वास्थ्यं नैव साऽनुकूलम्। कतिपय-मासात्प्रागेव विगतपौषमासे सं० २०५१ वैक्रमाब्दे उदरवेदनया महाकष्टानुभूतिर्जाता। अत्याधुनिकयान्त्रिकसाधनैर्वामवृक्के-सूक्ष्माऽश्मरीकणानां परिज्ञानं सञ्जातं तदर्थञ्च महाभागेन शल्यचिकित्सकेन विंशत्यङ्गुलात्मिका शल्यक्रिया सम्पादिता। तथापि षड्मासे व्यतीतेऽधुनाऽप्युदरे वामवृक्के च परमं कष्टं शल्यक्रियाजन्यं प्रभवति। कष्टमिदमिह वा जन्मान्तरीयकर्म-जन्यं तथा च ग्रहाणां वैपरीत्येन पौनःपुन्येन समुत्पद्यते। अनुग्रहविग्रहस्वरूपः श्रीसर्वेश्वरराधामाधवप्रभुः सर्वं शं विधास्य-तीत्यस्मद्द्रढीयान्प्रत्ययः। इति कृत्वैव ग्रन्थस्यास्य प्रकाशने महीयान्विलम्बोऽभवत्। अस्तु–श्रीसर्वेश्वरकृपाप्रसादतो ग्रन्थोऽयं विद्व-न्महानुभावानां परमश्रद्धालुभावुकभक्तानाञ्च पुरतः प्रस्तुतोऽस्ति यद्यनेन स्वल्पोऽपि लाभश्चेत्तर्हि परममङ्गलमितिशम्।

श्रीकृष्णजन्माष्टमी महोत्सवः

वि० सं० २०५२

—श्रीराधासर्वेश्वरशरणदेवाचार्यः

❋ श्रीसर्वेश्वरो जयति ❋

।। श्रीभगवन्निम्बार्काचार्याय नमः ।।

# -: समर्पणम् :-

श्रीमदाचार्यनिम्बार्क-पदाम्भोजे समर्पये ।
वेदान्तकामधेन्वाख्यां व्याख्यां सर्वहितावहाम् ।।१।।

लघुरूपात्मिकां व्याख्यां नवनीतसुधाऽभिधाम् ।
भेदाभेदेतिसिद्धान्त-दर्शिकामर्पये मुदा ।।२।।

शास्त्रज्ञानं न वैदुष्यं नैव भक्तिर्मतिश्च न ।
केवलं त्वत्कृपां प्राप्य लघुग्रन्थं समर्पये ।।३।।

सर्वेश्वरे पराभक्ति-र्नित्यं त्वत्पादपङ्कजे ।
अनुरागो भवेत्तीव्र-इति मे हार्दिको स्पृहा ।।४।।

श्रीकृष्णजन्माष्टमीमहोत्सवः वि० सं० २०५२

श्रीभगवन्निम्बार्कपदाम्भोजमकरन्दपिपासुः—

**श्रीराधासर्वेश्वरशरणदेवाचार्यः**

सुदर्शनचक्रावतार आद्याचार्य

जगद्गुरु श्रीभगवन्निम्बार्काचार्य

* श्रीसर्वेश्वरो जयति *

—* श्रीभगवन्निम्बार्काचार्याय नमः *—

श्रीसुदर्शनचक्रावतार–श्रीभगवन्निम्बार्काचार्य–प्रणीत–

# * वेदान्तकामधेनु–दशश्लोकी *

व्याख्या–

# "नवनीतसुधा"

अथाऽत्र सर्वेश्वरश्रीकृष्णकरकञ्जाऽङ्गुलिनित्यदिव्यविराजितचक्रराजसुदर्शनावतारो जयन्तीनन्दनोऽरुणकुमारो देवर्षिवर्य्य श्रीमन्नारदलब्धदीक्षः परमकारुणिकः परमाराध्यो भगवान् श्रीमन्निम्बार्काचार्यजगद्गुरुवर्य्यः परमाद्याचार्यपादः स्वीयविनिर्मित "वेदान्तपारिजातसौरभा-"ख्यं वेदान्तसूत्रवाक्यार्थमतिगम्भीराशयं सम्यग्विविच्य मुमुक्षूणां शाश्वतसुखबोधाय निखिलनिगमागमपरमसारसम्भूतां वेदान्तकामधेनुरूपां दशश्लोकीं विरचयामास।

तत्र दशश्लोकेषु प्राकृताऽप्राकृतकालात्मकाऽचेतनपदार्थस्य जीवात्मपरात्मरूप..................चेतनपदार्थस्य साधन-साध्यादिसकलपदार्थस्य चाऽतिसंक्षेपेण स्वरूपगुणलक्षणादीनां साधुतया महीयान्निर्देशो विहितः।

तत्राऽभ्यर्हितत्वात्प्राग्चेतनपदार्थवर्णनावसरे प्रत्यगात्मनः स्वरूपं दर्शयति वेदान्तकामधेनुदशश्लोकी–प्रथमश्लोकेन–

[ प्रथमश्लोकः ]

[ १ ]

## चित्स्वरूपम्

**ज्ञानस्वरूपञ्च हरेरधीनं शरीरसंयोगवियोगयोग्यम् ।**
**अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्तं यदनन्तमाहुः ।।**

श्लोकेऽस्मिन्प्रत्यगात्मनो जीवस्य सन्ति सप्तविशेषणानि तत्र तेषां क्रमेणाऽयमाशयः,—**ज्ञानस्वरूपञ्चे**त्यनेन जीवात्मनः स्वयं ज्योतिष्ट्वात्मकं प्रयुक्तं तच्च करणव्यापारायतप्रकाशशून्यत्वमव-बोध्यम् । **हरेरधीनमि**तिपदेन बद्धावस्थायामिव मुक्तावपि जीवस्य परमात्माऽऽयत्तस्वरूपस्थितिप्रकृतिकत्वं प्रतिपादितम् । ज्ञानस्व-रूपात्मकलक्षणस्य ब्रह्मण्यतिप्रसङ्गश्च वारितः ।

ननु परायत्तत्वे सति किन्नाम मुक्तित्वमिति चेच्छृणु जीवस्य तथाविध स्वरूपमेव ज्ञानसंकोचेन बद्धावस्थायाञ्च तस्य विस्मृत-त्वात् । स्वं स्वतन्त्रं मत्वा दुःखभाग् भवति जीवः, पुनश्च स्वरूप-प्राप्तितो या निरावरणसुखोपलब्धिस्तदेव मुक्तित्वं नाम बोध्यं भगवतो दिव्यगुणविग्रहाद्यनुभवात्मिका । **अणुमिति** पदेन जीवपरि-माणमतिसूक्ष्मतममभिव्यञ्जितम् । विभु-मध्यमपरिमाणयोश्च प्रत्याख्यानं विहितं, तथात्वे तु विभिन्नानुभूतिदुर्व्यवस्थापत्तिर्विना-शित्वापत्तिश्च प्रसज्ज्येत ।

"**शरीरसंयोगवियोगयोग्यमि**"त्यनेन "**प्रतिदेहभिन्नमि**"त्यनेन च जीवानामनेकत्वमनन्तत्वं द्योतितमेकजीववादश्च निराकृतः । 'नित्यो नित्यानामि'त्यादि श्रुतिभिः 'उत्क्रान्तिगत्यागतीनामि'-त्यादिसूत्रैश्च जन्म-मरणादिव्यवस्था विशदी कृता । **यत्**—यस्मात्

[ प्रथमश्लोकः ]

**"अनन्तमि"**तिपदेन जीवानां संख्याविप्रतिपत्तिर्निराकृता । लोके क्रमशो मुक्तिप्राप्तौ परिगणितानां कदाचित्सर्वेषां जीवानां मुक्तिर्भवेत्तर्हि बद्धजीवाभावात्संसारोच्छेदशङ्का चाऽति निराकृता जीवानामनन्तत्वात् ।

**"ज्ञातृत्ववन्तमि"**तिपदेन ज्ञानाश्रयत्वं दर्शितं **चकाराच्च** कर्तृत्व-भोक्तृत्वाऽऽश्रयत्वादिकसमुच्चयोऽपि दर्शितः । आहुरत्र श्रुतयो महर्षिजना वेति वक्तृपदं योजनीयम् । एवञ्च परमात्माऽऽयत्तस्थितिप्रवृत्तिकत्वे सति ज्ञानाश्रयत्वे सति कर्तृत्व-भोक्तृत्वाऽऽश्रयत्वे सति ज्ञानस्वरूपमणुपरिमाणकमनन्तसंख्यावच्छिन्नत्वं जीवलक्षणमुपात्तम् । अध्यस्तत्वं प्रतिबिम्बाभासाऽवच्छेदात्मकत्वं च जीवस्य निराकृतम् । तार्किकाभिमतकेवलज्ञानाश्रयत्वं मायावादिप्रकल्पितकेवलज्ञानस्वरूपत्वं च समालोचितमिति संक्षिप्तसारः ॥१॥

## जीवात्म–स्वरूप

यह जीवात्मा ज्ञानस्वरूप नित्य चेतन ज्योतिस्वरूप अर्थात् प्रकाश स्वरूप है तथा ज्ञातृत्ववान् अर्थात् ज्ञानाधिकरण ज्ञान का आश्रय है । यह जीवात्मा सर्वान्तरात्मा सर्वेश्वर श्रीहरि के सर्वदा अधीन है सभी अवस्थाओं में परतन्त्र है, परिमाण में यह अणुरूप अतिन्द्रिय है, नाना शरीरों के साथ संयोग–वियोग योग्य प्रत्येक देह में भिन्न–भिन्न और अनन्त है—वेदान्त वचन एवं महर्षियों के उपदेश इसी का प्रतिपादन करते हैं ॥१॥

[ द्वितीयश्लोकः ]

जीवात्मनः स्वरूपमितः प्राग्प्रथमश्लोकेन प्रतिपाद्य तद्भेद-माह,—

[ २ ]

**अनादिमायापरियुक्तरूपं त्वेनं विदुर्वै भगवत्प्रसादात् ।**
**मुक्तञ्च बद्धं किल बद्धमुक्तं प्रभेदबाहुल्यमथापि बोध्यम् ।।**

**'अनादिमाये'**ति श्रीहरेरनाद्यविद्याकर्मात्मिकया त्रिगुणात्मिकयाऽघटनघटनापटीयस्याऽनन्तब्रह्माण्डविमोहिन्याऽनिर्वचनीयया—ऽतिविलक्षणातमया मायया **'परियुक्तरूपम्'** बद्धावस्थापन्नस्वरूपमेव जीवं **'भगवत्प्रसादात्'** भगवतो निर्हैतुककृपाप्रसादादेव **'एनम्'** जीवं **'विदुः'** वेत्तुं पार्य्यते **'वै'** इति परमदार्ढ्यार्थं प्रयुक्तम् । **'तु'** शब्दः शङ्कापरिहारपरः । तत्रेदमवधेयं तद्यथा निखिलविश्वोत्पत्ति-स्थिति-संहारादिहेतुना परात्परपरब्रह्मणा पुराणपुरुषोत्तमेन भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायां समुपदिष्टं स्वयमेव यथा—

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।।**

यद्यपि त्रिगुणात्मिका भगवदीय-माया परमदुरत्ययाऽस्ति तथापि 'मामेव ये प्रपद्यन्ते' अर्थाद्ये जना श्रीभगवच्छरणापन्नाः समवतिष्ठन्ते तान्प्रति सुदुस्तरेयं मायाऽपि किमप्यनिष्टं नैव विदधाति 'मायामेतां तरन्ति ते' इति श्रीभगवद्वचनात्सौकर्य्येणाऽनन्त-भवाऽम्भोधिं समुत्तीर्य भगवत्प्रपन्नो जीवः श्रीहरिदिव्यधामस्थलं समत्राप्याऽसीमानन्दसुधारसं सर्वदाऽनुभवतीति परमाशयः । तथा चाऽत्राऽन्योपायास्तु तद्व्यक्तीकरणे विविधोपायभूतास्तत्र-मुक्त-बद्ध-बद्धमुक्तेतिभेदेन त्रिविधा जीवाः परिज्ञेयाः । अथ चाऽन्यदपि **'प्रभेदबाहुल्यम्'** इति शास्त्रोक्तं प्रबोध्यम् ।

[ द्वितीयश्लोकः ]

क्वचित्तु **'मुक्तञ्चभक्तमि'**त्यादिपाठान्तरमुपलभ्यते तस्याऽपि सङ्गतित्वमेव यथाहि–बद्धा जीवास्तथैव सर्वेश्वरपराभक्तिनिरता भक्ता अपि जीवाः सन्तीह सकलविश्वब्रह्माण्डे । इति कृत्वैव **'मुक्तञ्चभक्तमि'**त्यादिपाठान्तरमपि साधीयः । **'प्रभेदबाहुल्यम्'** त्वेवमवधेयं यच्चेतनस्य बद्ध-मुक्तभेदः प्रथमस्तत्र बुभुक्षु-मुमुक्षु-भेदाद्द्विविधा बद्धा बुभुक्षवश्च भाविश्रेयस्कनित्यसंसारीभेदाद्द्विविधाः । स्वस्वरूपप्राप्तिकामाः परस्वरूपप्राप्तिकामास्तथेत्थं मुमुक्षवोऽपि द्विविधा मुक्ता अपि नित्य-मुक्त-बद्ध-मुक्तभेदाद्द्विविधाः। पार्षदान्तरङ्गभेदान्नित्यमुक्ता अपि द्विविधाः स्वस्वरूपप्राप्तिवन्तः, परस्वरूपप्राप्ताश्चेति । बद्धमुक्ता अपि द्विविधा नित्यमुक्ता मुक्ताश्चेति । इत्यादिकमूह्य सविस्तरं वर्णनं तु श्रीपुरुषोत्तमाचार्यचरणाम्बुजविरचित 'वेदान्तरत्नमञ्जूषायाम्' समवलोकनीयं विपश्चिद्भिरिति शम् ।।२।।

ज्ञानस्वरूप एवं ज्ञातृत्ववान् होने पर भी जीव परात्पर परब्रह्म सर्वेश्वर श्रीहरि की अनन्त अचिन्त्य अघटघटनापटीयसी अनादिकर्मात्मिका त्रिगुणात्मिका माया से परिव्याप्त है अतएव अपने स्वरूप का यथार्थ बोध नहीं कर पाता, परन्तु उन सर्वज्ञ अखिलान्तरात्मा की जब अहैतुकी कृपा हो जाती है तब वह जीव अपने स्वरूप का यथार्थ परिज्ञान करने में समर्थ हो जाता है। बद्ध और मुक्त भेद से द्विविधरूप जीवात्मा बुभुक्षु–मुमुक्षु इत्यादि विविध भेदों में विभक्त रूप से अवस्थित है ।।२।।

[ तृतीयश्लोकः ]

प्रत्यगात्मस्वरूपप्रभेदादिकञ्च सम्यङ् निरूप्याऽत्र तृतीयश्लोकेनाऽचेतनतत्त्वं निरूपयति श्रीमदाद्याचार्यवर्य—श्रीभगवन्निम्बार्काचार्यपादः,—

[ ३ ]

## *अचित्स्वरूपम्*

**अप्राकृतं प्राकृतरूपकञ्च कालस्वरूपं तदचेतनं मतम् ।**
**मायाप्रधानादिपदप्रवाच्यं शुक्लादिभेदाश्च समेऽपि तत्र ।।**

प्रकृतिस्त्रिगुणात्मिका तत्कार्यजातञ्च जागतिकं सर्वं **प्राकृतं** तत्त्वं परिगण्यते तद्भिन्नं निरतिशयसौन्दर्य-माधुर्य-लावण्याद्यनन्तकल्याणगुणगणमहार्णवसर्वेश्वरराधाकृष्णदिव्यमङ्गलविग्रहस्वरूपं तथा च तत्परमदिव्यातिदिव्यसच्चिन्मयभगवद्धामादिकञ्चा— -ऽप्राकृततत्त्वं प्रोच्यते । 'आदित्यवर्णं तमसः परस्तात्' इत्यादिश्रुतेः तमःशब्दाभिधेयाभ्यां प्रधानकालाभ्यां परं विलक्षणम् । तत्रेदं श्रीहरेर्धामादिकं तु प्रकाशस्वरूपमपि धर्मभूतज्ञानाश्रयत्वाऽभावादचेतनतत्त्वे परिगण्यते । प्राकृताऽप्राकृताभ्यां भिन्नं क्षण-मुहूर्तादिव्यवहाराऽसाधारणहेतु**काल** इत्युच्यते । सर्वमपीदं प्राकृततत्त्वं कालायत्तं, कालश्च तस्य नियामकः । अप्राकृते तु न तस्य नियामकत्वम् । कालस्य सर्वनियामकत्वेऽपि सर्वेश्वरनियम्यत्वमेव । 'ज्ञःकालकालो गुणी सर्वविद्य' इतिश्रुतेः ।

यद्यपि लीलाविभूतौ छद्मना कालनियामकत्वं प्रतिभाति तथापि नित्यदिव्यविभूतौ तु कालस्य गतिरपि नाऽस्ति । अयञ्च कालः कालरूपेणाऽनित्यः । अखण्डकालस्तु नित्य एव । 'सदेव सौम्येदमग्र आसीत्' इत्यादि श्रुतिषु प्रलयेऽपि तस्य सत्वश्रवणात्, **शुक्लरक्तादिसमस्तप्रभेदास्तु मायाप्रधानादिपदप्रवाच्ये** प्राकृततत्त्वे

एव । प्रकृति-महदंहकारपञ्चतन्मात्रैकादशेन्द्रिय-पञ्चमहाभूतात्मकचतुर्विंशतितत्त्वैः सर्वाणि भूर्भुवाऽतलसुतलवितलादिचतुर्दशभुवनानि समुत्पद्यन्ते । इत्येवं विज्ञैरवधेयम् सूक्ष्माऽऽशयो विस्तृतविवेचनं तु 'वेदान्तरत्नमञ्जूषा' ग्रन्थे विलोकनीयम् ।।३।।

## अचित्स्वरूप (जगत्स्वरूप)

ज्ञानस्वरूपता एवं ज्ञातृत्व शक्ति से रहित को 'अचेतन' कहते हैं जो तीन रूप में विद्यमान है अप्राकृत, प्राकृत तथा कालस्वरूप । इनमें 'माया' 'प्रधान' प्रभृति शब्दों से अभिहित त्रिविध गुणों का आश्रय 'प्राकृत' रूप अचेतन कहा गया है जो शुक्ल-कृष्णादि भेद से विद्यमान है। प्राकृत तथा काल से विलक्षण प्रकाश स्वरूप नित्य दिव्य भगवद्धाम को अप्राकृत अचेतन में प्रतिपादित किया गया है ।।३।।

---

त्रिविधमचेतनं जीवञ्च निरूप्य तन्नियामकं निखिलविश्वोत्पत्यादिबीजं सर्वान्तरात्मानं ब्रह्मतत्त्वं विवेचयति श्रीमद्भगवन्निम्बार्काचार्यचरणाः—'स्वभावतोऽपास्ते'त्यादिश्लोकेन—

[ ४ ]

## ब्रह्म-स्वरूपम्

**स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम् ।**
**व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम् ।।**

अत्र वयमिति योजयित्वा श्लोकोक्ताष्टविशेषणविशिष्टं परमात्मानं भगवन्तं **श्रीकृष्णं ध्यायेम** इत्यन्वयबोधः । **स्वभावतोऽपास्तसमस्तदोषम्** स्वाभाविकतयाऽनादिप्रकृत्यैवाऽपास्ता निरस्ताः समस्ता निखिला- दोषा यस्मात्तमर्थादित्यनेन विशेषणेन परमा-

[ चतुर्थश्लोकः ]

त्मानो भगवतः श्रीकृष्णस्य प्राकृतहेयगुणरहितत्वं प्रतिपादितं तथा च निर्विशेषत्वपरकश्रुतिशास्त्रमपि निर्दिष्टम्। तद्यथा—'य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' **अशेषकल्याणगुणैकराशिमिति** ज्ञानशक्ति-बलैश्वर्यादि-जगज्जन्माद्यनन्तगुणगणाऽर्णवत्वं, निरतिशयसौन्दर्य-माधुर्य-लावण्य--कारुण्य-मार्दव--सौशील्य—सौकुमार्याद्यखिलदिव्य-कल्याणगुणनिलयत्वं, शास्त्रयोनित्व-सर्वनियन्तृत्व-सर्वात्मत्व-सर्व-व्यापकत्व--स्वतन्त्रसत्व-सर्वाधारत्व--मोक्षप्रदत्व-सर्वकर्मफलप्रदत्व-सर्वज्ञत्व-सर्वेश्वरत्वाद्यपरिमेयगुणाधिष्ठानत्वं प्रतिपाद्य 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंवि-शन्ति०' 'एको देवः सर्वभूतेषु गूढः०' 'अणोरणीयान्महतोमहीयान्' 'मित्योनित्यानां चेतनश्चेतनानाम्०' इत्यादि सगुणप्रतिपादक-श्रुतयो व्याख्याताः। एवञ्च सविशेष-निर्विशेषात्मकत्वैकस्यैव ब्रह्मणः श्रुतिसिद्धम्। **व्यूहाङ्गिनमित्यनेन** तस्यैव च वासुदेव-संकर्षण-प्रद्युम्नानिरुद्धादिष्वङ्गित्वमपि स्पष्टम्। तत्र व्यूहेत्युप-लक्षणार्थः, तथा च भगवदीयानेकावतारविद्योतकश्च वरीवर्ति। अवताराणां विविधविभेदास्तु व्याख्याताः—'वेदान्तरत्नमञ्जूषा-याम्।'

**वरेण्यमिति**पदवाच्यं भजनीयत्वं तच्च सौन्दर्य-सौकुमार्य-माधुर्य—लावण्य–कारुण्य-सौशील्य--मार्दवाद्यनन्तकल्याणगुणगणै-र्दिव्यमङ्गलविग्रहस्वरूपं परमवरणीयं जीवजातप्रमुखलक्ष्यं भवे-दिति-श्रुति-स्मृति-सूत्र-तन्त्र-पुराणादि--यावन्निखिलशास्त्रराद्धान्त-स्तद्यथा 'एष एवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्त-शीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूपः'। इत्यादि श्रुतेः। अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम्'।

[ चतुर्थश्लोकः ]

**"सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ।।**

इति श्रीमद्भगवद्गीतोक्तेश्च वरेण्यत्वं स्वाभाविकम् । **'कमलेक्षणमि'**ति विशेषणेन च भक्ताह्लादकरदिव्यविग्रहवत्वं सिद्ध्यति । कमलोपमे ईक्षणे यस्य तं कमलेक्षणम् । अर्थात् दिव्यरक्तोत्पललोचनम् । 'सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम्' नमः कमलनेत्राय नमः कमलमालिने' । इति मन्त्रवर्णनात् । यद्वा-कमलया लक्ष्म्या ईक्ष्यते--विलोक्यते--इति कमलेक्षणस्तं सौन्दर्यसीमानमित्यर्थः । 'रमा मानसहंसाय गोविन्दाय नमो नमः' इति मन्त्रप्रतिपादनात् ।

**'हरिमि'**ति ध्यातॄणां समुपासकानां मनोहरं परमप्रियं तेषामेव पापं हरति वा, यथाहि--'हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयाऽपिसंस्पृष्टो दहत्येव हि पावकः' ।। इतिवर्णनात् । आहोस्विद्-ब्रह्मादीनामपि हरणहेतुत्वात् ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च' ।

"प्रसह्य हरते यस्मात्, तस्माद्धरिरितीर्यते ।"

इत्यादिकथनाद् भक्तार्तिवारणशीलत्वाच्च हरित्वं स्पष्टमेव । एवंविधः परंब्रह्माख्यः श्रीकृष्ण एवास्ति । अतएव स एव मुमुक्षुध्यानविषयः । इममेवार्थं श्रीवादरायणः 'अथातो ब्रह्मजिज्ञासेति' सूत्रेण दर्शितवान् । ऐषणाविषयज्ञान-ध्यानयोः पर्याय भूतत्वात् । एवमेव तत्सूत्रविषयवाक्यरूपां 'आत्मा वाऽरेद्रष्टव्यः श्रोतव्यः ।' इत्यादिश्रुतिमनुसरेज्जिज्ञासासूत्रम् । अन्यथाऽनयोः श्रुतिसूत्रयोर्विषय-विषयीभावानुपपत्तिः । एवञ्च भेदाभेदप्रतिपादकसमस्तश्रुतीनामविरोधेन समन्वितं ब्रह्मतत्त्वं मुमुक्षुभिर्विमृग्यं

[ पञ्चमश्लोकः ]

ध्येयञ्चेतिश्लोकस्य स्थिरार्थः। श्लोकोऽयं निखिलनिगममातृरूपात्मकगायत्रीमन्त्रार्थपरको वरीवर्तीति मञ्जूषायां साकल्येन वर्णितोऽस्ति, तत्रैव प्रेक्षावद्भिरवलोकनीयः।

## ब्रह्म स्वरूप

जो स्वाभाविक रूप से यावन्मात्र निखिल दोषों से रहित हैं। सौन्दर्य–सौकुमार्य–माधुर्य–लावण्य-कारुण्य-मार्दवादि अनन्त दिव्य गुणों के असीम परमनिधि हैं। वासुदेव संकर्षण, प्रद्युम्न एवं अनिरुद्ध प्रभेद से चतुर्व्यूह एवं नानाविध अवतारों के जो मूल अङ्गी हैं। विधि-शिव-पुरन्दरादि सुरवृन्दों एवं पराभक्तिपरायण रसिक प्रपन्नभक्तों द्वारा सर्वदा वरेण्य अर्थात् परम उपासनीय है। ऐसे नयनाभिराम अरविन्दलोचन परात्पर परब्रह्म सर्वेश्वर श्रीहरि भगवान् श्रीकृष्ण का हम सभी अनन्त जीवात्मा प्रतिपल ध्यान करें ।।४।।

---

परब्रह्मश्रीकृष्णतत्त्वं विविच्य तद्भिन्नाभिन्नात्मिकां श्रीकृष्णपरमाह्लादिनीशक्ति निरूपयति पञ्चमश्लोकेन—

[ ५ ]

**अङ्गे तु वामे वृषभानुजां मुदा विराजमानामनुरूपसौभगाम्।**
**सखीसहस्रैः परिसेवितां सदा स्मरेम देवीं सकलेष्टकामदाम् ।।**

यद्यपि पूर्वमपि प्रकृतिशक्तिर्निरूपिता तथापि तस्या अचेतनान्तर्गतत्वात्ततोऽस्या विभिन्नत्वं चेतनत्वात्।

परब्रह्मभगवतो वामे अङ्गे मुदा सानन्दं विराजमानां स्थितां, सखीसहस्रैः सहस्रशब्दोऽनन्तानन्तवाची, अनन्तसखीभि-

[ पञ्चमश्लोकः ]

रित्यर्थः । **परिसेवितां**—समन्तात्सेव्यमानां, **सकलेष्टकामदां**—भक्तेभ्यस्तदभीष्टसमस्तकामान् ददातीति सा, तां **देवीं**—दिव्यस्वरूपां **वृषभानुजां**—श्रीराधिकां श्रीकृष्णाह्लादिनीं दिव्यप्रेमाधिष्ठात्रीं परमां शक्तिं **स्मरेम** वयमिति शेषः । इत्यन्वयार्थः ।

वृन्दावनाधिश्वरी नित्यनिकुञ्जेश्वरी सर्वेश्वरी श्रीराधा कृष्णस्वरूपैव भगवान्सर्वेश्वरः श्रीकृष्णश्च राधास्वरूपात्मको यथा हि—'यः कृष्णः सैव राधा या राधा सैव कृष्ण' 'एको ज्योतिरभूद्द्वेधा राधामाधवरूपकम्' इत्यादि श्रुति-स्मृति-प्रतिपादितसिद्धान्तानुसारेण तथा महावाणी रसग्रन्थकर्तृभिः श्रीमद्हरिव्यासदेवाचार्यचरणैरपि महावाण्यां 'राधां कृष्णस्वरूपां वै कृष्णं राधास्वरूपिणम्' इति निरूपितेन सच्चिन्मयगोलोकस्थ-दिव्यवृन्दावन—नित्यनिकुञ्जेश्वर्याः श्रीराधाया नाम—ग्रहणेन मुख्यत्वमेवाभिव्यञ्जितम् । इयञ्च शक्तिः प्रेरयितृ तत्वान्तर्गता नाऽतो—'भोक्ता भोग्यं प्रेरयितारं मत्वा' इतिश्रुत्युक्ततत्त्वत्रयाधिक्यत्वातिप्रसङ्ग इत्यपि नो विस्मर्तव्यम् । श्लोकेऽस्मिन्निखिलजगदभिन्ननिमित्तोपादानकारणस्य सर्वनियन्तुः श्रीसर्वेश्वरस्य भगवतः श्रीकृष्णस्याऽनिर्वचनीया परमप्रियतमा परमाह्लादिनी शक्ति सर्वेश्वरी श्रीराधा तस्याश्चानन्तस्वरूपशक्तिर्निरूपिता श्रीमदाद्याचार्यवर्यैः श्रीभगवन्निम्बार्काचार्यचरणैः । विस्तृतविवेचनन्तु मञ्जूषायामुत श्रीमद्धरिव्यासदेवाचार्यपादविरचित 'सिद्धान्त-रत्नाञ्जली' त्याख्यवेदान्तग्रन्थे समवलोकनीयं वेदान्ततत्त्वजिज्ञासुभिः प्रज्ञावद्भिरिति शम् ।

[ षष्ठश्लोकः ]

## ब्रह्म स्वरूप

ऐसे अनन्तदिव्यगुणगणनिलय सर्वेश्वर सर्वद्रष्टा भगवान् श्रीकृष्ण के वामाङ्ग में परमानन्द पूर्वक नित्य विराजमान उन्हीं अनन्तकृपासिन्धु श्रीप्रभु के अनुरूप सौन्दर्यमाधुर्यस्वरूपा परमाह्लादिनी श्रीवृषभानुनन्दिनी अतिशय सुशोभित हैं। अगणित नित्य सखी परिकर से प्रतिपल संसेवित हैं। प्रपन्न रसिक भगवद्भक्तों के मङ्गलमय मनोरथों को पूर्ण करने वाली श्रुति प्रतिपाद्य देवी श्रीराधिका का हम समस्त जीवमात्र सर्वदा स्मरण करें।।५।।

इतः पूर्वंश्लोकपञ्चकेन तत्त्वत्रयं साङ्गोपाङ्गतया प्रतिपाद्येदानीं भगवद्भावापत्ति-रूपमोक्षप्राप्तिसाधनीभूतामुपासनां दर्शयति करुणैकचित्ताचार्यपादः—

[ ६ ]

**उपासनीयं नितरां जनैः सदा प्रहाणयेऽज्ञानतमोऽनुवृत्तेः।**
**सनन्दनाद्यैर्मुनिभिस्तथोक्तं श्रीनारदायाखिलतत्त्वसाक्षिणे।।**

जनैरत्रश्रीहरिभक्तिनिरतैर्भगवद्दर्शनबुभुक्षुभिर्मुमुक्षुभिः,— अज्ञानतमोऽनुवृत्तेरनाद्यनन्तमायाजनिताऽज्ञानपरम्परापुञ्जप्रतिबन्धकस्य प्रहाणये—समग्रतयाऽऽत्यन्तिकनिवृत्यर्थं सदा—सर्वास्वस्थासु नितरां गङ्गादिप्रवाहवत्प्रतिक्षणं प्रतिपलञ्च–'सततमावर्तये सततमावर्तये।' इति श्रीगोपालतापिन्युपनिषद् रीत्या 'सततं कीर्तयन्तो माम्, श्रीमद्भगवद्गीतोक्तवचनेन च सातत्येन-पूर्वोक्तोपास्यपरकश्लोकद्वयप्रतिपादित श्रीराधाकृष्णयुगलतत्त्वं रसपरब्रह्म उपासनीयं भजनीयं ध्येयं गेयञ्चेति।

[ षष्ठश्लोकः ]

ननु--विविधोपास्यविषयकोपासनानां-विद्यमानत्वात्कथमेत-स्यैवोपास्यस्योपासना कार्येतिचेन्न। लोकाचार्यैः श्रीमत्सनत्कुमारा-दिभिः शास्त्रसारभूतत्वेनास्यैव प्राधान्यसमर्थितत्वात्। तद्यथाऽऽ-म्नायते छान्दोग्ये भूमविद्याप्रकरणे श्रीनारदकुमारसम्वादे 'यो वै भूमा तदेव सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमात्वेव विजिज्ञा-सितव्यं' इति भूमानं भगवो विजिज्ञासे' इति तथैव च वेदान्तसूत्र-भाष्ये भूमाधिकरणेऽपि निपुणं निर्दशितं परमाचार्यवर्यैः, निखिल-जगज्जन्मादिहेतुना परब्रह्मणा सर्वेश्वरेण श्रीकृष्णेनापि गीतायां समुपदिष्टं 'मय्येव मन आधत्स्व मयि बुद्धिं निवेशय' 'मच्चित्तः सततं भव'। 'मामेकं शरणं व्रज' 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' इत्यादि शास्त्रवचनैः पुराणपुरुषोत्तमो भगवान्सर्वे-श्वरः श्रीकृष्ण एव सततं समाराधनीयः इति निश्चप्रचम्। एत-देवोत्तरार्द्धेनाभिव्यनक्ति **सनन्दनाद्यैर्ब्रह्मणो** मानससुतै **र्मुनिभि**-र्मननशीलैः कुमारैः सनक-सनन्दन-सनातन-सनत्कुमारैरखिलतत्व **साक्षिणे** सकलशास्त्रोक्तसमस्ततत्वविदे **श्रीनारदाय** श्रीभगवन्नि-म्बार्कपरम्पराप्रकाशकपञ्चपदीविद्यात्मकश्रीगोपालमन्त्रराजप्रदाय-काय **तथा** श्रीवृन्दावननित्यनिकुञ्जेश्वर-सर्वेश्वरश्रीराधाकृष्णो-पासनमेव सर्वात्मना सम्पादनीयमित्येवं श्लोके **उक्तं** सम्यक्तया निगदितम्। एतेन स्वसम्प्रदायस्यानादिवैदिकतां गुरुपरम्पराञ्च प्रकाशयामास। विशेषविवेचनं तु मञ्जूषाकारेण विहितमिति तत्रैव समवलोकनीयमिति।

## उपासना

जागतिक अज्ञानान्धकार जिससे प्राणी सर्वदा विविध-कष्टानुभूति करता है, उसकी सर्वथा निवृत्ति के लिए भगवज्जनों

[ सप्तमश्लोकः ]

को भगवान् श्रीराधाकृष्ण की सर्वविध रूप से निरन्तर उपासना करनी चाहिए। उक्त उपासना परम्परा का श्रीसनकादि महर्षियों ने निखिलतत्त्वसाक्षी सर्ववेत्ता देवर्षिवर्य श्रीनारदजी जो हमारे सर्वस्व भगवत्स्वरूप श्रीगुरुदेव हैं, उन्हें यह उपदेश प्रदान किया और यही उपदेश श्रीदेवर्षि से हमें प्राप्त हुआ। अतः इसी युगल-उपासना का श्रीभगवद्दर्शनाभिलाषी परम रसिक भावुक उपासकों के हितार्थ यहाँ निर्देश किया है। वस्तुतः उक्त श्लोक में निर्दिष्ट अपनी उपासना-गुरु परम्परा का प्रतिपादन भी स्पष्ट है, इससे श्रीनिम्बार्क सम्प्रदाय का अनादित्व एवं वैदिकत्व भी सम्यक् प्रकार अभिव्यञ्जित हुआ है।

इतः पूर्वं तत्त्वमादि पदार्था निरुपिताः, तद्यथा हि—ज्ञान-स्वरुपमित्यादिश्लोकद्वयेन त्वं पदार्थः, अप्राकृतमित्याद्येकेन श्लोकेन इदं पदार्थः' 'स्वभावतोऽपास्ते'त्यादिश्लोकद्वयेन तत्पदार्थश्च व्याख्यातः। उपासनीयमितिश्लोकेन च तत्पदार्थस्य सर्वोपास्यत्वं, तदुपासनस्य च विधेयत्वं प्रतिपादितम्। अधुना श्लोकेनानेन पूर्व-श्लोकोक्तोपासनाख्य—निदिध्यासनस्याऽन्तरङ्ग—'श्रोतव्यः' । इत्यादिश्रुतिविधेयं वाक्यजन्यज्ञानं निरुपयँस्तत्त्वमस्यादिवाक्या-र्थमाह श्रीमदाचार्यपादः—

[ ७ ]

**सर्वं हि विज्ञानमतो यथार्थकं श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः**
**ब्रह्मात्मकत्वादिति वेदविन्मतं त्रिरूपताऽपि श्रुतिसूत्रसाधिता**

[ सप्तमश्लोकः ]

श्लोकस्यास्याऽन्वयप्रकारश्चेत्थं बोध्यम्-हि—यस्मात् निखिलस्य—समग्रस्य वस्तुनः चराचरात्मकस्य **श्रुतिस्मृतिभ्यः**-निरपेक्षस्वश्रुतिः, तदर्थविवेचिनी स्मृतिः, ताभ्यः स्वतः समूलत्वेन च प्रमाणीभूताभ्यः। **ब्रह्मात्मकत्वात्**—चराचरात्मकजगतोब्रह्माधीनस्वरूपस्थिति-प्रवृत्तिकत्वात् तादात्म्यादितियावत्। **अतः**—हेतोः **सर्वं**—प्रत्येकवस्तुजातस्य समग्रं **विज्ञानं**—बोधः **यथार्थकं**—वास्तविकं न भ्रम इत्यर्थः। ( यतः ) या **त्रिरूपता**—भोक्तृ-भोग्य—नियन्तृ-रूपविभिन्नता। **श्रुत्रिसूत्रसाधिता**—भोक्ता-भोग्यं प्रेरितारञ्च मत्वा, इत्यादि श्रुतिभ्यः 'अंशोनानाव्यपदेशात्' 'भेदव्यपदेशाच्चाऽन्यः' 'अधिकं तु भेदनिर्देशात्' इत्यादि सूत्रेभ्यश्च 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति श्रीभगवद्वचनाच्च निर्धारिता। सापि यथार्था, तदत्र प्रमाणं दर्शयति—**इतिवेदविन्मतम्**—वेदतत्त्वार्थविदां श्रीसनत्कुमार-नारद-व्यासादीनाम्, तस्मादेषराद्धान्तः। एवं तत्त्वमस्यादिवाक्यानां-संक्षिप्ताऽति संक्षिप्तोऽर्थोबोद्धव्यः स्वतन्त्रसत्ताश्रयो विश्वनियन्ता परमात्मा हि तत्पदार्थः। परतन्त्रसत्ताश्रयो सर्वेश्वरनियम्यो जीवश्च त्वं पदार्थः। असि पदश्च तादात्म्यसम्बन्धं तयोः सूत्रयति, तथा च त्वं तदात्मकोऽसीति वाक्यार्थो निर्भरति।

तादात्म्यञ्च भेद-सहिष्णुरभेदो भिन्नाभिन्नो द्वैताद्वैतऽपरपर्य्यायः। अतः शुक्तिरजतादिस्थलेऽपि नात्यन्तं भ्रमः पञ्चीकरणप्रक्रियया शुक्तावपि रजतां सत्वाद् विशिष्ट पार्थिवादिषु पदार्थेषुतदतिरिक्तपदार्थानामधिकांशत्वभानमेव भ्रान्तिर्निगद्यते। केवलाद्वैत-केवलद्वैत-प्रतिपादकवाक्यान्यपि क्रमशः स्वतन्त्रसत्ता-परतन्त्रसत्ता प्रतिपादनेनैव सार्थकानि, द्वैतनिषेधकवाक्यानि तु परतन्त्रसत्ताश्रयोर्जीव-जड़पदयोश्च स्वातन्त्र्यं निषेधयन्ति।

[ सप्तमश्लोकः ]

तत्रोभयविधश्रुति-स्मृति-सूत्रादि-वचनान्येवमवधेयम्, तद्यथा-ऽभेदप्रतिपादकानि वचनानि—'सदेव सोम्येदमग्रग्रासीदे'कमेवाऽद्वितीयम् । 'ग्रात्मा वा इदमेक एवाग्र ग्रासीत्' 'तत्त्वमसि' 'ग्रयमात्माब्रह्म' 'सोऽहं ब्रह्मास्मि' 'ग्रात्मैवेदं सर्वम्' 'सर्वं खल्विदं ब्रह्म' 'तज्जलानि' 'ग्रतएव च तद्ब्रह्म' 'ग्रनवस्थितेरसम्भवाच्च नेतरः' 'तदनन्यत्वमारम्भणशब्दादिभ्यः' 'क्षेत्रज्ञं चापि मां विद्धि' 'नास्ति परं ततोऽन्यत्' इत्यादि वचनानि तदभेदद्योतकानि सन्ति । एवञ्च-भेदप्रतिपादकानि वचनान्यपि समवधेयानि, तद्यथा—'नित्योनित्यानाम्' 'रसो वै सः' 'रसं ह्य वायं लब्ध्वाऽऽनन्दी भवति' 'सोऽश्नुते-सर्वान्कामान् सह ब्रह्मणाविपश्चिता' स तत्र पर्येति जक्षन् क्रीड़न् रममाणः' 'सर्वभूतान्तरात्मा ग्रन्तः प्रविष्टः शास्ता जनानाम्' 'ज्ञाज्ञौ द्वावजावीशानीशौ' प्रधानक्षेत्रज्ञपतिर्गुणेशः । 'ज्योतिषां ज्योतिः' 'सर्वस्य वशी सर्वस्येशानः' भेदव्यपदेशाच्च' 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' 'विवक्षितगुणोपपत्तेश्च' 'सर्वधर्मोपपत्तेश्च' 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च' 'उत्तमः पुरुषस्त्वन्यः' 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन' इत्याद्युभयात्मकानि श्रुति-सूत्र-स्मृतिवचनानि ज्ञातव्यानि सन्ति । एवञ्चोभयविधवाक्यानि—सादरमभिगृह्य श्रीनिम्बार्काचार्यवर्येण—जगन्नियन्त्रा भगवता सर्वेश्वरेण सह चेतनाचेतनयोः स्वाभाविकद्वैताद्वैत (भेदाभेद) सिद्धान्तः प्रतिपादितः । तच्च सर्वनियन्तृत्व-सर्वात्मत्व--सर्वव्यापकत्व-स्वतन्त्रसत्व-सर्वाधारत्वादिधर्मैश्च तस्यतयोश्चात्यन्तभेदः । ब्रह्मात्मकत्व-तन्नियम्यत्व- तत्तन्त्रसत्व-तत्पराधेयत्वादियोगेन चाऽभेदः । एवञ्च संक्षेणैवाऽवबोध्यम् । विस्तृत-विवेचनन्तु 'वेदान्तरत्नमञ्जूषायामे'वाऽवलोकनीयम् ।।७।।

[ अष्टमश्लोकः ]

## ब्रह्मात्मकता ( द्वैताद्वैततत्त्व )

विचित्ररचनारूप चेतनाचेतनात्मक यह समग्र जगत् ब्रह्मात्मक है। पुराणपुरुषोत्तम परब्रह्म सर्वेश्वर श्रीकृष्ण समस्त जगत् की एकमात्र अन्तरात्मा है सुतरां सम्पूर्ण विज्ञान ध्रुव रूप से यथार्थक है। भोक्ता, भोग्य, नियन्ता यह त्रिविध त्रिरूपता श्रुति एवं ब्रह्मसूत्र से साधित यथार्थरूप है अतएव ब्रह्म और जगत् सत्य है। यह समस्त जगत् ब्रह्मात्मक होने से ब्रह्म से अभिन्न है श्रुति-सूत्र-स्मृति द्वारा भिन्न स्वरूप प्रतिपादित होने से यह ब्रह्म से भिन्न भी है। एवंविध यह चेतनाचेतनात्मक जगत् ब्रह्म से भिन्न भी है एवं अभिन्न भी वस्तुतः यही स्वाभाविक भिन्नाभिन्न भेदाभेद या स्वाभाविक द्वैताद्वैत सिद्धान्त है इसे ही वेदतत्त्वज्ञ श्रीसनकादि महर्षि एवं श्रीनारदादिदेवर्षि या महर्षि व्यास ने प्रतिपादित किया है।

## शरणागतिः

सप्तमश्लोके कोष्ठद्वये क्रमशः प्रथमे तत्त्वमादिपदार्थाः संक्षेपेण निरूपिता द्वितीये च कोष्ठे भेदपराणामभेदपराणां भेदनिषेधकारिणाञ्चाऽस्थूलादिवाक्यानां समन्वयप्रक्रियां प्रदर्श्य सर्वस्य वेदस्य स्वार्थे प्रामाण्यं प्रतिपादितम्। अधुनाऽनेनाष्टमश्लोकेन तृतीयकोष्ठे साधनानि विधीयन्ते। तानि साधनानि कर्म-ज्ञान-भक्ति-प्रपत्ति–गुर्वाज्ञानुवृत्तियोगभेदात्पञ्चविधानि सन्ति। तत्र कर्मयोगः श्रीभगवच्चरणैराचार्यैः 'सदाचारप्रकाशे' निर्णीतः। ज्ञानयोगश्चाऽत्रैव ग्रन्थे संगृहीतो भक्तियोगश्चाऽग्रिमे नवमश्लोके परि-

वर्णितोऽस्ति । श्लोकेनानेन तु प्रपत्ति-गुर्वाज्ञानुवृत्तियोगौ प्रतिपाद्येते—

[ ८ ]

**नान्या गतिःकृष्णपदारविन्दात् संदृश्यते ब्रह्मशिवादिवन्दितात्**
**भक्तेच्छयोपात्तसुचिन्त्यविग्रहा-दचिन्त्यशक्तेरविचिन्त्यसाशयात्**

**अचिन्त्यशक्तेः**—न चिन्तितुं शक्या अचिन्त्या अचिन्त्या चाऽसौ शक्तिर्यस्य सः, अचिन्त्यशक्तिः, तस्मात् अचिन्त्यशक्तेः। 'परास्यशक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च । इत्यादिशास्त्रप्रमाणात् । **अविचिन्त्यसाशयात्**—आशयेन सह वर्तमानं साशयं ( तात्पर्यं ) ब्रह्मादिभिरप्यचिन्त्यं, सर्वथैवाऽतर्क्यं साशयं तात्पर्यं यस्य स, अविचिन्त्यसाशयस्तस्मात् । 'न ते विष्णो जायमानो न जातो देवस्य महिम्नः परमं तमापः' । 'यतो वाचो निवर्तन्ते' । इत्यादि श्रुतिवचनात् तदचिन्त्यत्वं स्वाभाविकमेव । **भक्तेच्छयोपात्तसुचिन्त्यविग्रहात्**—भक्तानामिच्छा भक्तेच्छा तयोपात्तो व्यक्तीकृतो विश्वरूपादि-सुचिन्त्य-विग्रहो येन स तस्मात् । यथाऽर्जुनादिसमीहया-विश्वरूपादिविविधाऽचिन्त्यदिव्यस्वरूपदर्शनात् सर्वेश्वरश्रीकृष्णस्य भक्तेच्छयोपात्तसुचिन्त्यविग्रहत्वं स्वतः सिद्धमेव । तत्र श्रीमद्भगवद्गीतायामर्जुनेन सम्प्रार्थितो भगवान् श्रीकृष्णः समुपदिशति, यथाहि—'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः' । इत्यादि गीतोपदेशात् ।

**ब्रह्मशिवादिवन्दितात्**—ब्रह्मा च शिवश्च ब्रह्म शिवौ तौ आदि र्येषां ते ब्रह्मशिवादयस्तै र्वन्दितस्तस्मात्, ब्रह्मशिवादिवन्दितात् । अर्थादत्रेदमवधेयम्—यद्यावन्निखिलविधिशिव-पुरन्दर—

[ अष्टमश्लोकः ]

किन्नरादिसुरवृन्दैस्तथा श्रीसनकादिनारदादिसमस्तऋषिमुनीश्वरैः सततस्तुतिपूर्वकसेवितात् । यथाहि—'यं सर्वे देवाः नमन्ति मुमुक्षवो ब्रह्मवादिनश्च तमेकं गोविन्दं सच्चिदानन्दविग्रहं वृन्दावनसुरभूरुह तलासीनं सततं समरुद्गणोऽहं परमया स्तुत्या तोषयामीत्यादि-श्रुतिवचनात् स्पष्टमेव । **कृष्णपदारविन्दात्**—निखिलजगदुत्पत्ति—स्थितिलयकारणरूपभगवत्परात्परब्रह्मसर्वेश्वरपरमानन्दकन्द-—-नन्दनन्दनगोलोकव्रजवृन्दावनविहारियुगलचरणकमलात् । 'कृषि-र्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः । तयोरैक्यं परब्रह्म कृष्ण-शब्देन गीयते' । इत्यादि श्रुतिप्रमाणात् कृष्णपदाभिधेयपरब्रह्मणो-ऽतिरिक्तात्—**नान्यागतिः**—अन्या-अपरा गतिः-अवलम्बो **न**-नैव **संदृश्यते**—विलोक्यते क्षेत्रज्ञानां कृते इति शेषः । अत्र कृष्णपदार-विन्दात्—इत्यत्र पदशब्दमुपादाय विग्रहयुक्तस्यैव प्रपत्तव्यता द्योति-ताः । अरविन्दशब्देन च तत्पदनखसौन्दर्यमभिव्यनक्ति । भगव-च्चरणशरणागतिं ( प्रपत्तिं ) विना कथमपि मुमुक्षूणां जागतिक-त्रिविधतापविमोचनं भवितुं नैव शक्यतेऽयमेवाशयः श्लोकवचन-स्य । तथा चेयमेव प्रपत्तिः शरणागतिरूपैव प्रतिपादिता भवति । 'आनुकूल्यस्य संकल्पः प्रातिकूलस्य वर्जनं । रक्षिष्यतीति विश्वासो-गोप्तृत्ववरणं तथा ।। आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः' ।। इति शास्त्रराद्धान्तदर्शनात्—भगवच्छरणागतिस्वरूपप्रतिपादनं स्पष्टम् । अत्र श्रीभगवच्छरणागतिगुर्वाज्ञानुवृत्तियोगस्यापि तदुभयलक्षणं यतोहि 'न बिना गुरु सम्बन्धं ज्ञानस्याधिगमः कुतः । गुरुः पारयिता तस्य ज्ञानं प्लवमिहोच्यते' । इत्यादि भारतोक्त-मानेन सर्वस्यापि साधनजातस्य गुरूपसत्तिपूर्वकत्वात् । गुरूपसत्ति-रप्यत्रार्थादेव प्रतिपादितेति बोध्यम् । अलमिति—व्याख्यान-विस्तरभिया ।।८।।

[ नवमश्लोक: ]

## शरणागति

भगवान् श्रीकृष्ण के ब्रह्मशिवादिवन्दित युगलपदारविन्द के अतिरिक्त जीवों के लिए अन्य कोई गति अर्थात् मार्ग या अवलम्ब दृष्टिगत ही नहीं है। शरणापन्न भक्तों की उत्तम इच्छा के अनुरूप मङ्गलमय विग्रह स्वरूप धारण करने वाले अचिन्त्य शक्ति स्वरूप विधि–शिव-पुरन्दरादि द्वारा जिनके आशय को समझना अचिन्त्य एवं अतर्क्य है। अत: एवंविध स्वरूप विराजित भगवान् श्रीकृष्ण के चरणकमल के बिना कोई मार्ग अर्थात् शरण्य नहीं है। श्रीभगवत्—शरणागति ही इस श्लोक का अति संक्षिप्त भावार्थ है।

## पराऽपराभक्तिः

अष्टमश्लोकेन श्रीभगवत्प्रपत्तिं गुर्वाज्ञानुवृत्तियोगं साङ्गोपाङ्गतया प्रतिपाद्याथाऽत्र नवमश्लोकेन भक्तियोगमाह श्रीभगवन्निम्बार्काचार्यचरणाः—

[ ९ ]

**कृपास्य दैन्यादियुजि प्रजायते यया भवेत्प्रेमविशेषलक्षणा।**
**भक्तिर्ह्यनन्याधिपतेर्महात्मनः सा चोत्तमा साधनरूपिकाऽपरा**

**अस्य**—निरतिशयस्वाभाविकसौन्दर्य-माधुर्य-लावण्य-कारुण्य-मार्दव-सौकुमार्य--सौशील्य-वात्सल्य--क्षमा-कृपा-दया-सौहार्द-सत्य-प्रतिज्ञत्वाद्यनन्तगुणगणमहोदधेः सर्वनियन्तुः सर्वात्मनः सर्वान्तर्या--मिणः सर्वेश्वरस्य भगवतः श्रीकृष्णस्य कृपा-निर्हेतुकपरमदिव्यानुग्रहो

[ नवमश्लोकः ]

**दैन्यादियुजि**—सर्वथैवाभिमानादिशून्ये निरवलम्बे श्रीभगवच्छरणापन्ने परमानन्यप्रपन्ने कार्पण्यादियुक्तेऽर्थात्–'उपाया नैवसिद्धयन्तीत्यपाया विविधास्तथा। इति या गर्वहानिस्तद्दैन्यं कार्पण्यमुच्यते'। इति वचनात्पूर्वोक्तभगवत्प्रपन्ने भगवच्चिन्तनपरायणे जने 'हि' इति निश्चप्रचतया **प्रजायते**—आविर्भवति, प्रकटी भवति अर्थात् समुत्पद्यते। **अनन्याधिपतेः, महात्मनः**—इत्येतद्विशेषणद्वयं परब्रह्मणो भगवतः श्रीकृष्णस्य सर्वेश्वरत्वं सर्वाधारत्वं शरणागतपालकत्वं निर्हेतुककरुणार्णवत्वादिगुणसमूहं विशदयति। अत्रायमाशयोयन्निखिलविश्वान्तरात्मा भगवान् श्रीकृष्ण एव सर्वाधिपति र्वरीवर्ति ततः परं न कोऽपि विद्यते, अर्थात्तदेव समस्त जगत्पतिरस्ति, यथा हि—'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्। पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनैकमीड्य' मित्यादि वचनात्तस्य सर्वोत्कृष्टत्वं प्रसिद्धमेव॥ **यया**—भगवत्कृपया परमात्मविषये **प्रेमविशेषलक्षणा**—प्रेम एव विशेषलक्षणं यस्याः, **च सा उत्तमा**—पराभक्तिः प्रभवेत्। अत्राऽयमाशयो यत्पूर्वं भगवतो दिव्यगुणस्वरूपादीनां ज्ञानं प्रभवति सत्सङ्गादिभिर्गुरूपदेशेन च ततश्च परब्रह्मणि भगवति श्रीराधाकृष्णे साधनरूपाऽपरा भक्तिः सञ्जायते। तदनन्तरं भगवत्स्वरूपस्य विशेषज्ञानं जायते, तेन च प्रेमलक्षणा पराभक्तिराविर्भवति, यत्रानुरक्ताः परमानन्यभक्ता मुक्तिमपि नाऽभिलषन्ति।

एवञ्चास्मिन्श्लोके भगवतो भावं ( अपहतपाप्मत्वादिकं ) प्रापिका साध्यसाधन–रूपाऽपरपर्यायभूता पराऽपराद्विविधा भक्ति विस्तरतः परिवर्णितेति संक्षिप्तभावः॥९॥

[ दशमश्लोकः ]

## परा-अपरा भक्ति

अनन्त कृपापयोधि भगवान् श्रीकृष्ण की अनिर्वचनीय कृपा दैन्यादि लक्षण समन्वित शरणागत भक्तों पर होती है। जिस दिव्य भगवदीय कृपा से उन दयार्णव सर्वेश्वर के पादपद्मों में जो भक्ति है वही फलरूपा एवं प्रेमलक्षणा उत्तमा पराभक्ति कही गई है, और यह पराभक्ति उन अनन्य रसिकेशेखर महात्माओं के अन्तःकरण में ही आविर्भूत होती है तथा बहुजन्मार्जित सत्कर्म साधन से प्राप्त होने वाली साधनरूपा अपरा भक्ति कहलाती है। यही इस श्लोक का संक्षिप्त भावार्थ है।

---

## अर्थपञ्चक-विवेकः

इतः प्राक्पूर्वप्रकरणे संक्षिप्ततया समन्वयाविरोधसाधन—क्रमरूपेण वेदान्तसूत्रोक्तपदार्था निरूपिताः, अत्राधुना फलविवक्षया सर्वशास्त्रार्थं संगृह्णन् पूर्वप्रतिपादितार्थं पुनः संस्मारयति स्वल्पधीयां कृते परमाद्याचार्यवर्यः श्रीभगवन्निम्बार्काचार्यचरणाः—

[ १० ]

**उपास्य रूपं तदुपासकस्य च कृपाफलं भक्तिरसस्ततः परम् ।**
**विरोधिनो रूपमथैतदाप्ते ज्ञेया इमेऽर्था अपि पञ्च साधुभिः ॥**

**उपास्यरूपं**—उपास्यस्य परमात्मनो—वेदान्तकामधेनु-दशश्लोक्यामेवचतुर्थ-पञ्चमश्लोकवर्णितस्य भगवतः श्रीराधाकृष्णस्य **रूपं**—अर्थात्तस्य निरतिशय-सौन्दर्य-माधुर्य-कारुण्य-लावण्याद्यनन्तदिव्यसच्चिदानन्दस्वरूपं तथा च **तदुपासकस्य**— तस्य परमात्मनः

[ दशमश्लोकः ]

उपासकस्य क्षेत्रज्ञस्य प्रत्यगात्मनो मुमुक्षोर्जीवस्य रूपं च **कृपाफलम्**-अनन्तकोटिब्रह्माण्डाधिपतेर्जगज्जन्मादिहेतोर्मुक्तोपसृप्यस्य क्षराक्षरातीतस्याऽकारणकरुणावरुणालयस्य भगवतः श्रीराधाकृष्णस्य कृपायाः फलं मुक्तिलक्षणम्, अर्थादात्यन्तिकदुःखनिवृत्तिपूर्वक श्रीभगवद्भावापत्तिरूपात्मिकैव मुक्तिर्यथाहि—'परं ज्योतिरूपसंपद्य स्वेन रूपेणाभिसंपद्यते' । इति श्रुतेः तथैव परब्रह्मणा भगवता श्रीकृष्णेन गीतायां समुपदिष्टं—"मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" 'तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्' 'तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्' । इत्यादिवचनै-र्भगवतः कृपाफलरूप-मोक्षस्वरूपं स्पष्टमेव । **ततः परम्**—सर्वेश्वरस्य भगवतः कृपा-फलावाप्त्यनन्तरं **भक्तिरसः**—भक्तेः—पराभक्ते रसः परमप्रेमानन्दोऽर्थाद्-भगवत्कृपाफलरूपात्मिका भक्तिरथवा भक्त्या रस्यतेऽनुभूयते, इति भक्तिरसः श्रीभगवत्—साक्षात्कारानुभवः । 'भक्तिवशः पुरुषो भक्तिरेव भूयसीति' श्रुतेः 'भक्त्या त्वनन्यया शक्यः' 'अनन्येनैव योगेन मां ध्यायन्त उपासते' ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्' इति भगवद्वचनाच्च भक्तिरसवैशिष्ट्यं स्पष्टमेव ।

**अथ**—भक्तिविवेचनानन्तरं **एतदाप्तेः**-एतस्य पुराणपुरुषोत्तमस्य भगवतः सर्वेश्वरस्य श्रीराधाकृष्णस्य **आप्तेः**—प्राप्तेरर्थात्तद्दिव्यमङ्गलविग्रहदर्शनाऽवाप्ते र्ये श्रीभगवत्प्राप्तिप्रतिबन्धकभूताः काम-क्रोध-लोभ-मोह-मद-मत्सरादयो विविधाऽन्तरायाः सन्ति तेषां सर्वविधं रूपं सम्यक्तया साकल्येन **साधुभिः**—मुमुक्षुभिर्जनैरवश्यं **ज्ञेयाः**—अवधेयाः, तथा चैते पूर्वोक्ता उपास्य-उपासक-कृपाफल—भक्तिरस—विरोधिरूपा **इमे पञ्चविधा अर्थाः अपि**

[ दशमश्लोकः ]

श्रीराधाकृष्णसमुपासकैश्च नितान्ततया-सर्वदाऽवधारणीयाः सन्ति । अत्रानेनैवार्थपञ्चकज्ञानेन सर्वं ज्ञानं भवतीति निष्कर्षः । विस्तरस्तु वेदान्तरत्नमञ्जूषायां श्रीभगवन्निम्बार्काचार्यपीठविराजितैराचार्यवर्यैः पुरुषोत्तमाचार्यचरणै विहितस्तत्रैव जिज्ञासुभिः प्रज्ञावद्भिरवलोकनीयम् ॥१०॥

## अर्थपञ्चक-विवेक

(१) **उपास्य**—परात्पर रसपरब्रह्म नित्यनवयुगलकिशोर सर्वेश्वर श्रीराधाकृष्ण के दिव्य स्वरूप का परिज्ञान (२) **उपासक**—इस जीवात्मा के स्वरूप का ज्ञान (३) **कृपाफल**—भगवान् श्री राधाकृष्ण की कृपा का श्रीभगवत्प्राप्ति फल (४) **भक्तिरस**—अर्थात् श्रीराधासर्वेश्वर प्रभु के युगलपदाम्बुजों में अनन्य परा-भक्ति । (५) **विरोधीस्वरूप**—अर्थात् श्रीभगवद्विग्रह में प्राकृत बुद्धि करना, भगवत्परक मन्त्रों को सामान्य शब्द की भावना करना, श्रीभगवद् गाथाओं में सन्देह प्रकट करना आदि तथा काम, क्रोध, लोभ-मोहादि ये सभी भगवत्प्राप्ति में परम विरोधी रूप हैं। एवंविध इन पाँच प्रकार के अर्थपञ्चक का साधकजनों को अवश्य ही परिज्ञान करना नितान्त आवश्यक है ।

# पुरुषार्थप्रसाधिनी नवनीतसुधा

इह किल कृपाकूपारश्चक्रावतारो भगवान्निम्बभानुरज्ञानतमस्के समस्ते जगति द्वैताद्वैताख्यां विख्यातां श्रीमद्‌हंससमारब्धामनादिवैदिकसिद्धान्तपद्धतिं पुनरुद्धृतवान्, तांश्च सुदुर्लभामपि सर्वसुलभां चिकीर्षुर्वेदान्तकामधेनुं नाम सुश्लोकां दशश्लोकीं प्रसादगुणपूर्णां प्रणिनिनाय। तस्या गम्भीरगरिमाणं तत्परम्पराप्रतिनिधिः श्रीपुरुषोत्तमाचार्यः विस्तृतं पराक्षेपविक्षेपणसक्षमं महन्मंजूषाख्यं निबंधं न्यबध्नात्। सत्स्वपितत्सारोद्धारसक्षमेषु वहुषु ग्रंथेषु शास्त्रार्थानुशासिषु दयोदन्वान्-अनन्तश्रीविभूषितोऽस्मदाचार्यवर्यः श्रीराधासर्वेश्वरशरणदेवाचार्यश्रीचरणो नवनीतामपि पुराणप्राणां वसुधासुधामयीं व्याख्यां लघ्वीमपि विशदतात्पर्यां सर्वसाधारणार्थामपि असन्दिग्धावधारणां अस्मभ्यं प्रसादीकृत्य प्राकाशयत्। तत्र निवेदनीयम्—

असागरसमुद्भूता-मसहस्रभुजाऽऽहृताम्।
श्रयध्वं कामसुरभिं श्रीमन्निम्बार्कसूचिताम् ॥१॥
पुरुषोत्तमपरिवेष्टा स्वादयितारश्चसुमनसः सर्वे।
वेदान्तकामधेनोः दशधादुग्धं सुधाधिकं धयत ॥२॥
वृहन्मंजूषिकागुप्तामलभ्यां कुंचिकादिभिः।
आचार्यदयया दत्तां नवनीतसुधां श्रये ॥३॥
कर्णास्वाद्या हृदाऽऽधेया पुरुषार्थ—प्रसाधिनी।
नवनीतसुधाचित्रं चतुरानन—चुंबिता ॥४॥

अकम्पानुकम्पार्थी—

**राधावल्लभः शास्त्री**

कचनारिया, दूदू (जयपुरम्)

# ॥ नवनीतसुधैव जीवनम् ॥

इह खलु समस्मिन्विश्वस्मिन् नाम धीमान् परमात्मस्वात्म विषये विचिन्तयन् सुनिश्चितनिर्णयमलभमानोऽपि सन्तुष्टिमनुशीलयिष्यति । पुनः पुनरपि अन्तर्विमथ्नन् स्वमतिसामर्थ्यं गर्हयन् गुरून् गौरवेणोपगाहते । तत्रापि च परम्परापक्षपातान्प्रत्यक्षीकृत्य वेदानां नित्यसत्ववतां माहात्म्यमनुशृण्वन्तः तत्र श्रमं साधयति, तेष्वपि विषयतारतम्यं वैशृंखल्यञ्चाखिलं खलति, ततोविधिप्रधानान्ब्राह्मणानारण्यकानभ्यस्तान् कुर्वाणः समाधानं च धत्ते विधिबन्धयतामन्धोप्येनमन्धयति । सर्वथाऽवैयर्थ्यार्थी वेदान्तप्रान्तान् निर्भ्रान्तान्निश्चित्य भाषासारल्येन शान्ति सन्तोषञ्च यद्यप्येति तथापि तत्र द्वैतमद्वैतं परस्परविरुद्धधर्मवत्तां विदित्वा निर्विण्णोभगवन्तमेव भाग्यनिर्णायकं भजते । सा च भक्तिरवश्यमेव सफली भवित्री, यत् शीलशालिष्वाचार्यचरणेषु सर्वथा शरणवरणमेवसूचयति । देशिकाः दयालवो स्वदयालवेन तमात्मसात्कृत्य स्वं द्वैताद्वैत-समन्वयान्वयं निर्विरोधं तत्त्वमुपदिशन्तः कृतार्थयन्ति । तदेव तत्त्वं गहनमप्यङ्गुलिगण्यं विधाय सुदर्शनावतारो भगवान् निम्बार्काचार्यः सर्वप्रथमं प्रकटीचकार । आद्याचार्यविनिर्मिता दशश्लोकी तत्सिद्धान्तानां सम्यक् सन्दर्शनक्षमाऽतीवसरला गुरुगम्भीराचाऽस्ते ।

तद्गाम्भीर्यं च तत्कृपापात्रं श्रीपुरुषोत्तमाचार्यो वेदान्तरत्नमंजूषाऽभिधे स्वप्रबन्धग्रन्थे सुसम्यक् न्यबध्नात् । तस्यापिदुरूह-

तामालोच्य महावाणी प्रणयित्रा श्रीहरिव्यासदेवाचार्येण सिद्धान्तरत्नाञ्जलिं निर्माय सुसरलीकृता। तथापि लघुमञ्जूषात्मिका व्याख्या श्रीमद्गिरिधरप्रपन्नैः प्रपञ्चिता। तत्काठिन्यं तु श्रीमताऽमोलकरामशास्त्रिणा — कुञ्चिकाख्यव्याख्यामाख्याय प्रत्याख्यातं, परं पुनरपि अल्पज्ञत्वादधुनातनानामल्पमेधस्त्वात् देवभाषानभिज्ञत्वाच्च हैयङ्गवीनहृदयोऽनन्तश्रीविभूषितश्रीमदाचार्यवर्यो "नवनीतसुधा"ऽभिधां सकलदुरूहताशमनीं सुमधुरार्थजननीं लोकोद्धारसमर्थां सार्थां निर्माय महदुपकृतं वैष्णवानामिति। एषा "नवनीतसुधा" व्याख्या नवनीतवत् स्निग्धा मधुरा च सुधावद्विबुधपोषिणी सहृदयानां हृदयङ्गमा साधारणानामपि धारणाऽध्यायिनी। परमप्रीत्याहं तु प्रतिजाने जगद्गुरूणां "श्रीजी" महाराजानामविसंवाद आशीर्वाद एव।

**सीताराम शास्त्री श्रोत्रियः**
निम्बार्कभूषणः, साहित्याचार्य
एम० ए०, शिक्षाशास्त्री
शिक्षामन्त्री-अ. भा. निम्बार्काचार्यपीठम्
सलेमाबाद-अजमेर-राजस्थानम्

श्रीकृष्णजयन्ती सं० २०५२
उपसंरक्षक—
श्रीसर्वेश्वरसंसद् जयपुरम्
२०२००३ राजस्थानम्
दि. १८ अगस्त १९९५ ई.

# नवनीतसुधायाः प्रकाशनं परमहितावहम्

श्रीसुदर्शनचक्रावतार–श्रीभगवन्निम्बार्काचार्यप्रणीतायाः – "वेदान्तकामधेनु" दशश्लोक्याः "नवनीतसुधा" नाम्नी व्याख्या मे दृष्टिपथमायाता, या हि–अनन्तश्रीविभूषितैः प्रातःस्मरणीयैः भगवत्पादैः निम्बार्काचार्यपीठाधीश्वरैः श्रीराधासर्वेश्वरशरणदेवाचार्यैः प्रणीता। इतः पूर्वमपि निम्बार्काचार्यपीठाधीश्वरैः श्रीपुरुषोत्तमाचार्यै–रथ च भगवत्पादैः श्रीहरिव्यासदेवाचार्यैं दशश्लोक्य व्याख्यानं कृतमिति विश्रुतम्। इयं रचना शाश्वती, सरला सुबोधगम्या, विषयं हस्तामलकवत् विविनक्ति। सिद्धान्तविवेचनपट्वीयं व्याख्या सर्वेषां हिताय प्रभविष्यतीति विज्ञाय मोमुद्यते चेतः। वस्तुतः साम्प्रतिके काले मूलग्रन्थरहस्यस्य व्याख्याग्रन्थरूपेण प्रकाशनं नितरामत्यावश्यकमपि प्रतिभाति, येन हि जनाः रहस्यज्ञानं स्वात्मसात्कर्तुं प्रभवः स्युः।

अहं वेदान्तकामधेनोः दशश्लोक्याः नवनीतसुधापानाय-अनन्तश्रीविभूषितश्रीनिम्बार्काचार्यपीठाचार्याणां कार्तज्ञ्यं प्रकटन् प्रणामाञ्जली विनिवेदयामि—

**निदेशकः**
राजस्थान संस्कृत अकादम्याः
जयपुरम्

**प्रभाकरः शास्त्री**
वरिष्ठप्रभाषकः संस्कृत
राजस्थान विश्व विद्यालय

# नवनीतसुधा के प्रति अपने भाव

भारतीय दर्शन शास्त्र वेद मूलक है, दर्शन शास्त्रों में भी वेदान्त दर्शन का महत्व सर्वोपरि है, वेदान्त दर्शन का भी आत्म-स्वरूप, सर्वशास्त्र समन्वयात्मक, सर्वमान्य निम्बार्क वेदान्त माना गया है, जिसमें वेद के सम्पूर्ण वचनों का सम्यक् आदर करते हुए उनका अकाट्य समन्वय किया गया है।

निम्वार्क दर्शन पर आधारित अनेक दुरूह ग्रन्थ है। जो उद्भट विद्वद्गम्य है। भगवान् निम्बार्क ने दार्शनिक, आध्यात्मिक तत्त्व--विस्तार को मात्र दशश्लोकों में गुम्फित करके गागर में सागर भरने की उक्ति को चरितार्थ करते हुए दार्शनिक तत्त्व जिज्ञासु मनीषियों तथा परम भावुक जीवों के कल्याण के लिए वेदान्त दशश्लोकी ( वेदान्त कामधेनु ) ग्रन्थ की रचना करके दार्शनिक जगत् के समक्ष एक अद्भुत अपूर्व उदाहरण प्रस्तुत किया।

दशश्लोकी के दश ही श्लोकों में वेदान्त के निगूढ़ तत्त्व का एक अपूर्व एवं ऐसी अनोखी पद्धति से समावेश किया कि जिसमें सम्पूर्ण वेदान्त का समावेश हो जाता है, पूर्वाचार्यचरणों ने अपने-अपने समय की परिस्थिति एवं आवश्यकता के अनुसार दशश्लोकी पर विस्तृत व्याख्याग्रन्थों की रचना की है, जो वेदान्त शास्त्र के महामनीषियों के बोधगम्य होने से उनका और भी सरलीकरण किया गया, किन्तु उक्त ग्रन्थ आज की परिस्थिति में अति विस्तृत और दुरूह माने जाते हैं। अतः हमारे परम पूज्य परम श्रद्धेय

वर्तमान आचार्यश्री अनन्त श्रीविभूषित जगद्गुरु निम्बार्काचार्य श्री "श्रीजी" श्रीराधासर्वेश्वरशरणदेवाचार्यजी महाराज ने अपनी साहित्य सर्जन साधना के अन्तर्गत पूर्वाचार्यप्रवरों की पद्धति का अनुसरण करते हुए साम्प्रतिक दार्शनिक विद्वत्समाज एवं भावुक भक्तजनों के परम हितार्थ वेदान्त दशश्लोकी पर आधारित दुरूह ग्रन्थों का मनन, चिन्तन एवं मन्थन करके उनके सारसर्वस्व रूप में "नवनीतसुधा" नामक यथा नाम तथा गुण व्याख्या की रचना करके निम्बार्क जगत् का महान् उपकार किया है। साथ ही संक्षिप्त हिन्दी अनुवाद देकर उक्त दार्शनिक तत्त्वज्ञान को साम्प्रतिक निम्बार्क दर्शन के जिज्ञासुओं के लिए भी बोधगम्य बना दिया है।

मेरा दृढ़ विश्वास है कि यह सामान्य नवनीत नहीं है, अपितु नवनीतसुधा है, अमृत है, जो भी भाग्यशाली जीव इस नवनीतसुधा का पान करेगा, सेवन करेगा, वह निश्चित रूप से श्रीराधामाधव की प्रेमा भक्ति की पात्रता प्राप्त करके अपने जीवन को कृतार्थ करेगा।

श्रीचरणकमलचञ्चरीक—

**दयाशङ्कर शास्त्री**

साहित्याचार्य

**मन्त्री—**

आचार्यपीठस्थ विद्यालय समिति

# सर्वं हि विज्ञानमतो यथार्थकम्

भगवत्प्रिय श्रीसुदर्शन-चक्रावतार आद्याचार्य जगद्गुरु भगवान् श्रीनिम्बार्काचार्य-प्रणीत 'श्रीवेदान्तकामधेनु' ( दशश्लोकी ) के अति संक्षिप्त दश ही श्लोकों में मानो गागर में सागर भर देने वाली सदुक्ति को चरितार्थ कर बताया है, यह श्रीनिम्बार्क भगवान् का बड़ा भारी कृपाप्रसाद है।

जीव, प्रकृति, परब्रह्म, पराशक्ति, उपासना, सिद्धान्त, अनन्यता, कृपा, अर्थ पञ्चक आदि समस्त तत्त्वों का इसमें भली प्रकार दिग्दर्शन हुआ है।

श्रीनिम्बार्क सम्प्रदाय की आचार्य परम्परा में श्रीहँस भगवान् से लेकर ७ वीं संख्या में अनन्त श्रीसमलंकृत जगद्गुरु निम्बार्काचार्य श्रीपुरुषोत्तमाचार्यजी महाराज ने इसी 'वेदान्त-दशश्लोकी' पर 'वेदान्त रत्नमञ्जूषा' नामक व्याख्या की अद्भुत रचना की है, तथा रसिकराजराजेश्वर श्रीहरिव्यासदेवाचार्यजी महाराज ने भी 'सिद्धान्तरत्नाञ्जलि' नामक व्याख्या की कृपा की है वह भी अनुपम है। इसी प्रकार विद्वद्वर श्रीगिरिधरप्रपन्न ने 'लघुमञ्जूषा' व्याख्या तथा विद्वन्मूर्धन्य पं० श्रीअमोलकरामजी शास्त्री (वृन्दावन) ने मञ्जूषा पर 'कुञ्चिका' टीका करके जो महनीय कार्य किया है वह विलक्षण है, इसी प्रकार अधिक

ब्र० पं० श्रीलाडिलीशरणजी ने भी हिन्दी में दशश्लोकी पर ही 'अर्थपञ्चकनिर्णय' ग्रन्थ लिखकर जो साहित्य सेवा की है वह अवलोकनीय है। अभी चार वर्ष पूर्व ही गोलोकवासी विद्वद्वर पं० श्रीरामगोपालजी शास्त्री (जयपुर) ने भी हिन्दी-संस्कृत में 'दशश्लोकी' का सरल सरस अनुवाद किया है वह भी पठनीय है और स्वर्गीय प्रोफेसर श्रीमोहनलालजी केवलिया (जोधपुर) ने अंग्रेजी में अनुवाद किया है वह भी मननीय है।

अभी सम्प्रति वर्तमान श्रीनिम्बार्काचार्यपीठाधीश्वर अनन्त श्रीविभूषित जगद्गुरु निम्बार्काचार्यपीठाधीश्वर श्रीराधासर्वेश्वर-शरणदेवाचार्य श्री "श्रीजी" महाराज ने तो इस पर अति संक्षिप्त शब्दों में संस्कृत भाषा में "नवनीतसुधा" नामक व्याख्या लिख-कर विद्वानों एवं विद्यार्थियों के मनन हेतु बड़ी भारी कृपा की है।

आपकी ग्रन्थावली संस्कृत भाषा में एवं अति सरल हिन्दी भाषा में भी प्रकाशित है। भावुक भक्तजनों को प्राप्त कर उसका भी मनन करना चाहिये।

विनीत—

**पं० गोविन्ददास 'सन्त'** निम्बार्कभूषण
धर्मशास्त्री, द्वैताद्वैत विशारद, पुराणतीर्थ
निम्बार्ककोट, अजमेर

॥ श्रीसर्वेश्वरो जयति ॥

# अपने भाव

श्रीनिम्बार्क भगवान् के अनेक ग्रन्थ समवलोकनीय मननीय एवं अपने अन्तःकरण में सर्वदा अवधारणीय हैं। उन ग्रन्थों में सर्वाधिक सुप्रसिद्ध "वेदान्तकामधेनु-दशश्लोकी" है। इसके अतिरिक्त 'वेदान्त पारिजातसौरभ' 'ब्रह्मसूत्र भाष्य' 'श्रीकृष्णप्रातः-स्मरण स्तोत्र' 'श्रीराधाष्टक स्तोत्र' 'मन्त्ररहस्यषोडशी' 'प्रपन्न-कल्पवल्ली' आदि कतिपय ग्रन्थ प्रकाशित हैं। 'प्रपत्तिचिन्तामणि' 'सदाचारप्रकाश' 'गीतावाक्यार्थ' ये दिव्यातिदिव्य ग्रन्थ दुर्भाग्य से अनुपलब्ध है। इन ग्रन्थों का विवरण पूर्वाचार्यों के ग्रन्थों के निर्दिष्टानुसार यह अनुभूति अवगम्य है। अस्तु प्रस्तुत ग्रन्थ 'वेदान्तकामधेनुदशश्लोकी' पर पूर्वाचार्यों ने अनेक व्याख्यायें की हैं। उक्त व्याख्यायें विस्तृत और क्लिष्ट होने के कारण वर्तमान आचार्यप्रवर अनन्त श्रीविभूषित जगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वर श्रीराधासर्वेश्वरशरणदेवाचार्य श्री "श्रीजी" महाराज ने विद्वानों, मेधावी छात्रों, भगवद्भक्तों के हितार्थ 'वेदान्तकामधेनु-दशश्लोकी' की "नवनीतसुधा" नामक देववाणी संस्कृत में सरल बोधगम्य व्याख्या करने का जो अनुग्रह किया है वह सभी के लिये परम हितावह महत्वपूर्ण कार्य है। मैं श्रीसर्वेश्वर प्रभु से आपके मंगलमय स्वास्थ्य की मङ्गल-कामना करते हुए अपने भावों को विराम देता हूँ।

**पं० श्रीमुरलीधर शास्त्री**
**निम्बार्कभूषण**
प्रेमसरोवर, गाजीपुर, बरसाना
मथुरा ( उ० प्र० )

अनन्त श्रीविभूषित जगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वर

# श्रीराधासर्वेश्वरशरणदेवाचार्य

## श्री "श्रीजी" महाराज

### द्वारा विरचित ग्रन्थ-माला

| | | | | श्लोक संख्या |
|---|---|---|---|---|
| १. | श्रीनिम्बार्क भगवान् कृत "प्रातः स्तवराज" पर 'युग्मतत्त्वप्रकाशिका' नामक संस्कृत व्याख्या | | | |
| २. | श्रीयुगलगीतिशतकम् | [संस्कृत-पद्यात्मक] | प्रकाशित | ११८ |
| ३. | उपदेश-दर्शन | | | |
| ४. | श्रीसर्वेश्वर सुधा-बिन्दु-[पद सं० ११८] | | ,, | |
| ५. | श्रीस्तवरत्नाञ्जलिः | [संस्कृत-पद्यात्मक] | ,, | ३८२ |
| ६. | श्रीराधामाधवशतकम् | ,, | ,, | १०५ |
| ७. | श्रीनिकुञ्ज सौरभम् | ,, | ,, | ५८ |
| ८. | हिन्दु संघटन | [हिन्दी-गद्यात्मक] | ,, | |
| ९. | भारत-भारती-वैभवम् | [संस्कृत-पद्यात्मक] | ,, | १३५ |
| १०. | श्रीयुगलस्तवविंशतिः | ,, | ,, | १८६ |
| ११. | श्रीजानकीवल्लभस्तवः | ,, | ,, | ३४ |
| १२. | श्रीहनुमन्महाष्टकम् | ,, | ,, | ९ |
| १३. | श्रीनिम्बार्कगोपीजनवल्लभाष्टकम् | ,, | ,, | १४ |
| १४. | भारत कल्पतरु [पद सं० १४६] | | ,, | |
| १५. | श्रीनिम्बार्कस्तवार्चनम् | ,, | ,, | ६५ |
| १६. | विवेक-वल्ली [दोहा सं० ४०६] | | ,, | |
| १७. | नवनीतसुधा | [संस्कृत-गद्यात्मक] | ,, | |
| १८. | श्रीनिम्बार्कचरितम् | [संस्कृत-गद्यात्मक] | अप्रकाशित | |

कुल श्लोक संख्या ११०६